1-6

॥ श्रीः ॥

। गदाधरभट्टाचार्यविरचितः ।

# ॥ विधिस्वरूपवादः ॥



" बडोदा " मण्डलान्तर्गतब्राह्मणग्राममधिवसता

संप्रति मुम्बापुरीवास्तव्येन

रैक्व ( रायकवाळ ) लल्लुराम तनुजनुषा

## जीवरामशास्त्रिणा

। संशोधितः ।

स च

## मुकुन्दात्मज—ज्येष्ठारामशर्मणा

वीरक्षेत्रस्थ नूतनविलासाख्य मुद्रणालये

मुद्रयित्वा

॥ प्रकाशितः ॥

नमोगणेशाय ।

# विधिस्वरूपविचारः ।

विधि—निषेधार्थवादभेदेन वाक्यं त्रिविधम् । तत्र प्रवर्त्तकं वाक्यं विधिः । ओदनकामः पचेत स्वर्गकामो यजेतेत्यादिलौकिकालौकिकवाक्यानां प्रवर्त्तककर्त्तव्यताज्ञानजननेन प्रवर्त्तकत्वाद्विधित्वम् ।

अथ तरति मृत्युं तरति ब्रह्महत्यामित्याद्यर्थवादानामपि फलसाधनताबोधद्वारा प्रवर्त्तकतया तत्रातिप्रसङ्गः । नच कर्त्तव्यताबोधकवाक्यत्वं विधित्वं तच्च नार्थवादानामिति वाच्यम्, पाकं कुर्व्वीत यागं कुर्व्वीतेत्यादिवाक्यासंग्रहात्, न हि तत्र कृतिसाध्यत्वरूपं कर्त्तव्यत्वं प्रतीयते, धात्वर्थकृतौ कृतिसाध्यत्वबाधेन लिङा तद्बोधनासम्भवात् । न च तत्र

धातुना कृतिर्द्वितीयया च साध्यत्वरूपं कर्म्मत्वं प्रत्याय्यत इति कृतिसाध्यताबोधकत्वमनपवादमिति वाच्यम्, तर्हि पाकं करोतीति यागं करोतीति वाक्यानामपि दर्शितरीत्या कृतिसाध्यताबोधकत्वेन तादृशार्थवादातिप्रसङ्गात्। अत्र विषयत्वरूपं कर्म्मत्वं न तु जन्यत्वरूपं प्रतीयत इति चेदुच्यते तदा पाकं कुर्व्वीतेत्यादावपि विषयत्वमेव कर्म्मत्वमित्यविशेषो दुर्वार एव। वस्तुतः पाकानुपधायकतद्विषयककृत्युत्तरकाले पाकं चकारेत्यादिप्रयोगविरहात्कृतिसाध्यत्वमपि तत्कर्म्मताघटकमतोदुर्वार एवातिप्रसङ्गः। नच प्रवृत्तिजनककृतिसाध्यताधीजनकवाक्यत्वं तत् पाकं करोतीति वाक्यजन्यकृतिकर्म्मताबोधस्याप्रवर्त्तकत्वान्नाति प्रसङ्ग इति वाच्यम्,। तादृशवाक्यजन्यज्ञानस्य कृतिसाध्यताविषयकत्वे प्रमाणान्तराधीनेष्टसाधनताज्ञानसहका-

रेण तस्य प्रवर्त्तकताया दुर्वारत्वात्। उच्यते। इष्टसाधनताबोधकवाक्यं विधिः, पाकं कुर्वीते त्यादिवाक्यं च धात्वर्थकृताविष्टसाधनताबोधकं पचेतेत्यादिवाक्यंच धात्वर्थपाकादौ तद्बोधकं सर्वत्र विधिप्रत्ययस्येष्टसाधनताबोधकत्वात्। नच न कलञ्जं भक्षयेदित्यादिनिषेधेऽतिव्याप्तिस्तस्यापि कलञ्जभक्षणाभावे नरकानुत्पादरूपेष्टसाधनताबोधकत्वादिति वाच्यम्। क्रियाविशेषणतयैव विधिप्रत्ययस्येष्टसाधनताबोधकत्वव्युत्पत्तेः। निषेधस्थले च बलवदनिष्टाननुबन्धीष्टसानत्वाभावस्यैव क्रियायां बोधोपगमात्। क्रियाविशेषणीभूताभावविशेषणत्वेऽपि परम्परयैव इष्टसाधनत्वस्य क्रियाविशेषणत्वेन उक्तव्युत्पत्त्यभङ्गात्। अथैवमप्यभावविशेषणतयेष्टसाधनताबोधकत्वमादायैव निषेधातिप्रसङ्गोदुर्वारः,, आश्रयतासम्बन्धेन इष्टसाधनताप्रकारकबोधजनकत्वनिवेशे-

ऽपि आश्रयतया तद्विशिष्टपाकादिबोधकतदादिपदघटिते वाक्येऽतिप्रसङ्गः । धातूपस्थाप्यार्थे साक्षाद्विशेषणतयेष्टसाधनताबोधकत्व विवक्षणे पाण्डित्यकामोजन्मतिथावामिषं न भुञ्जीतेत्याद्यभावविधावव्याप्तिरिति चेन्न, आश्रयतासम्बन्धेन प्रत्ययोपस्थापितेष्टसाधनत्वान्वितस्वार्थपरपदघटितवाक्यत्वस्य विवक्षणीयत्वात्, जन्मतिथावामिषं न भुञ्जीतेत्यादावामिषभोजनाभाव इष्टसाधनमितिबोधे आश्रयतयैवाभावे प्रत्ययोपस्थापितेष्टसाधनतान्वयः । न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणं बलवदनिष्टाननुबन्धीष्टसाधनत्वाभाववदित्यादिबोधे च नाश्रयतया इष्टसाधनतान्वयः । उक्तव्युत्पत्तिस्त्वप्रामाणिकीति भावः । न च क्रियाकार्य्यतामात्रस्य विधिप्रत्ययार्थतावादिमीमांसकानां मते स्वर्गकामोयजेतेत्यादि सकलविधीनामेव नैतल्लक्षणेन संग्रहः, यत इष्टसाधनताया विधि-

त्वानभ्युपगमे पाकं कुर्वीत पाकं करोतीतिवाक्यजन्यबोधाविशेषेण एकस्य प्रवर्त्तकता नापरस्येत्यनुपपत्तेः, तन्मतं विचारासहमेव अतोमीमांसकमतेऽपि कृतिसाध्यत्वमिष्टसाधनत्वं पृथग्विध्यर्थ एव, परन्तु न्यायमतवन्मिलितं तदुभयं न विध्यर्थः अतोऽहरहः सन्ध्यामुपासीतेत्यादौ तन्मते अयोग्यतया इष्टसाधनतानन्वयेन केवलकृतिसाध्यताबोधनिर्वाहः। अतएव विलम्बभाविफलसाधनक्रियाविधायकवाक्येन व्यापारगतस्वर्गादिफलसाधनताबोधनमपि तेषामुपपद्यत इति युक्तमुत्पश्यामः॥

नचैवमुक्तलक्षणेनाहरहरित्यादि नित्यविधीनां न तन्मते संग्रह एवेतिवाच्यम्, इष्टसाधनत्वद्विष्टसाधनत्वाभाववत्त्वयोरिच्छाविषयताप्रयोजकधर्म्मत्वेनानुगमय्य लक्षणे निवेशनीयतया नित्यविधिसंग्रहसम्भवात्,

(१) नित्यविधिस्थले लिङ्पदस्य द्विष्टसाधनत्वाभाववत्त्ववाचकतामभ्युपेत्यैव तस्य प्रवर्त्तकत्वनिर्वाहात्। न्यायमते च नित्यस्थलेऽपि सर्वत्रेष्टसाधनत्वमेव विध्यर्थः सन्ध्योपासनादेरपि ब्रह्मलोकगमनादिसाधनताया अर्थवादेन बोधनात्। मुमुक्षवोऽपि प्रत्यवायानुत्पादरूपफलसाधनताबोधात् तत्र प्रवर्त्तन्ते, अतस्तादृशफलसाधनत्वमपि तत्तद्विध्यर्थः तत्साधनत्वञ्च क्षेमसाधारणम्।

अथ स्वर्गकामो यजेतेत्यादितः स्वर्गादिसाधनत्त्वमेव प्रतीयते न तु तात्पर्य्यभ्रमादपि इष्टान्तरसाधनत्वमिति समभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकावच्छिन्नसाधनत्वे विधिप्रत्ययशक्तिः स्वीकार्य्या, तथा च सन्ध्यावन्दनादिविधौ फलकामवाचकपदाभावात् कथं फलसाधनताबोधः। यदि च विश्वजिता यजेतेत्य-

[१] तथाच आश्रयतासम्बन्धेन प्रत्ययोपस्थितेच्छी विषयताप्रयोजक धर्म्मान्वितार्थपरपदघटितावाक्यत्वं विधित्वमिति तु परमार्थः।

त्रैव फलकामवाचकपदं तत्राप्यध्याह्रियते अर्थवादोऽपि विध्युत्थापितो विधिप्रत्ययस्य स्वोपस्थापितब्रह्मलोकावाप्त्यादिरूपेष्टविशेषत्वात् पर्य्यग्राहक इति तात्पर्य्यविषयफलबोधोपपादकतत्कामवाचकपदाध्याहार उपयुज्यते। अतो विधेरिष्टसाधनताबोधकत्वमित्युच्यते तदा ब्रह्मलोकावाप्त्यादिरूपभाव फलकामबोधकपदमात्रसमभिव्याहारकल्पने मुमुक्षावशेन तत्कामनाशून्यस्यानधिकारापत्तिः। नरकाभावरूपफलकामबोधकपदमात्रसमभिव्याहारकल्पने च भावफलकामनाया अधिकारत्वानुपपत्तिः। उभयफलकामबोधकपदसमभिव्याहारकल्पने च संवलिताधिकारापत्त्या एकैकमात्रफलकामस्याधिकारो नस्यादिति तस्याकरणं प्रत्यवायं नानुबध्नीयात्। यदि च फलद्वयकामनायाः पृथक् पृथक् धर्म्मिविशेषणतया बोधकं अधिकारिपदं कल्प्यते तदा वाक्यभे-

दापत्तिर्वाक्यार्थभेदात्। यदि च नरकनिवृत्ति-ब्रह्मलोकावाप्तिकामइत्यादिपदमेवकल्प्यतेअत्र च एकफलविशेष्यतापन्नकामनायामपरस्य एककामनाविशेष्यतापन्नधर्म्मिणि अपरकामनाया वा अन्वये न तात्पर्य्यमुपेयते येनोभयकाम एवाधिकारी स्यात्, अपितु एकफलधर्म्मितावच्छेदकतापन्नकामनात्वावच्छिन्ने तत्फलाविषयककामनासाधारण्येन फलान्तरान्वये कामनान्वयस्य चशौचादिरूपपररूपरधर्म्मितावच्छेदकताप न्नधर्म्मावच्छिन्ने पररूपरानाश्रयसाधारण्येनान्वये तात्पर्य्यं, एवं सति वाक्यभेदस्याप्यनवकाशः विशेषणद्वयनिरूपित विशेष्यतयोरभेदस्यावच्छेद्यावच्छेदकभावस्य वा विशेष्यभेदेनासम्भवेऽपि तदुभयनिरूपितधर्म्मितावच्छेदकतारूपविषयताया अभेदस्यावच्छेद्यावच्छेदकभाव स्य वा सत्त्वात्।अतएव सर्वेभ्यो दर्शपौर्णमासा

वित्यत्रप्रकृतवाचि शब्दोपस्थाप्य पुत्रपश्वादिफ
लनां तत्कामनानाञ्च दर्शितरीत्या पृथक्पृथगेव
कामनाधिकारिरूपविशेष्ययोरन्वयेऽपि न वाक्य
भेदः न वा धवखदिरौ च्छिनत्तीत्यादौ भिन्नभि
न्नकर्म्मत्वस्य छिदादिविशेषणत्वेऽपि तथा, तथा
सति समासानुपपत्तेः। न चैवमपि कामनाया
अधिकारिविशेषणत्वे कामनाशून्यशौचादिम
तां सन्ध्योपासनाद्यकरणे प्रत्यवायो न स्यादि
ति वाच्यम्। निन्दार्थवादस्य कामनारूपाधिका
ररहितसाधारणशौचादिमत एवाकरणे प्रत्य
वाय इत्यत्र तात्पर्य्यात्। अतएव समर्थस्या
स्तिकस्य तदनुष्ठाननैयत्यं तादृशस्य प्रत्यवा
ये द्वेषेण तत्परिजिहीर्षावश्यकत्वात्, यस्य
च प्रत्यवाये न बलवान् द्वेषोऽपि तु नान्तरी
यकश्रमादावेव तेनानुष्ठीयत एव तत्तत्कर्मेत्यु-
च्यते तदापि सकृदनुष्ठितात् दर्शपौर्णमासादि
तः पुत्रपश्वादिरूपनानाफलानामिव तादृशा

त् सन्ध्यावन्दनादिनित्यकर्मणोपि नरकनिवृत्ति ब्रह्मलोकावाप्त्यादिरूपफलद्वयस्यासिद्धिप्रसङ्गः। उत्पत्तिवाक्ये फलस्य समुच्चयबोधकासत्त्वे वैकल्पिकमेव फलमिति योगसिद्ध्यधिकरणसिद्धान्तात्। नच तादृशस्थले भावरूपफलानामेव समुच्चयः न तु भावाभावरूपफलयोरपीति वाच्यम्। बीजसाम्येनाविशेषात्। उत्पत्तौ फलानां यत्र एककामनायां युगपदन्वयरूपो योगो नास्ति तत्र मिलितफलकामनाया अनधिकारतया प्रत्येकफलकाम एवाधिकारीति नानाफलकामनया एकमनुष्ठानं न शास्त्रार्थ इत्येव हि उक्तसिद्धान्तबीजं तद्भावाभावरूपफलसाधारणमपि। न च तत्तत्कामनात्वेन कामनाया अधिकारतया समूहालम्बनकामनावतो विभिन्नकामनाद्वयवतो वा अधिकारोऽव्याहत एव समूहालम्बनादिरूपकामनायाः प्रत्येकं तत्तत्फलविषयत्वाक्षते

रित्यसौ सिद्धान्तो निर्युक्तिक एवेति वाच्यम्। शब्दानामवधारणपरताया औत्सर्गिकतया असमुच्चिततत्तत्फलकामबोधकपदानां तत्तत्फलमात्रकामपरतया[१] समूहालम्बनादिरूपकामनारतोऽनधिकारस्य युक्तत्वात्।

अत्रोच्यते नित्यकाम्यस्थलेऽनिष्टनिवृत्तिसंवलिततत्तत्फलकाम एवाधिकारी अतोजयन्तीव्रतादितः सकृदनुष्ठितादपि प्रत्यवायपरीहारः तत्तत्फलञ्च सिध्यति, एवं सन्ध्यावन्दनादितोऽपि। न चैवं प्रत्यवायपरिजिहीर्षामात्रेण मुमुक्षूणां तत्तत्कर्म्मानुष्ठानानुपपत्तिरनधिकारित्वादिति वाच्यम्। समुच्चितफलकामाधिकारिककर्म्मण एकैकफलकामनासहकारेणापि तत्तत्कामनाविषयफलजनकत्वोपगमात्। अन्यथा काश्यादिमृतस्य नरकाद्यभावनिश्चयेन तन्नरकोद्धारादिकामनारहिततत्प-

(१) तत्तत् कामनामात्रपरतयेति पाठान्तरम्।

त्न्यास्तत्सहमरणस्य सकलशिष्टसम्मतस्यानुपपत्तेः। व्यालग्राही यथा व्यालमित्यादिवचनैः पत्युर्नरकोद्धारादिफलसहितस्वर्गभोगस्य सहमरणफलत्वबोधनात्। तत्तत्कामनाशून्यायाः सहमरणानधिकारात्। अतएव एतान्महाराजविशेषधर्म्मानित्यादिवाक्यबोधितमहस्तपः प्रवृत्यनेकलोकभोगपूर्वकविष्णुलोकगमनादिफलकतडागयागादिकमपि केवलविष्णुलोकगमनादिफलकामनया शिष्टैरनुष्ठीयते। यदि च तादृशाचारबलात्प्रत्येकफलकामकर्त्तव्यताबोधकश्रुतिरपि तत्र कल्प्यते इत्युच्यते तदा प्रकृतेऽपि तादृशश्रुत्यन्तरमाचारवशादुपेयं, तदुभयफलकामनयापि शिष्टानां सकृदनुष्ठानात् समुच्चितफलकामकर्त्तव्यत्वबोधकमपि श्रुत्यन्तरं गत्यन्तरविरहस्य तुल्यत्वादित्यलं विस्तरेण।

अथ क्षेमसाधारणसाधनत्वस्य विध्य-

र्थत्वे न कलञ्जं भक्षयेदित्यादिनिषेधस्थले कलञ्जभक्षणेन तत्कृत्या वा प्रतियोगितया अन्वितेनाभावेन नरकनिवृत्तिरूपेष्टसाधनत्वस्वान्वयः किमिति नोपेयते बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य पृथक् शक्त्या बलवदनिष्टासाधनत्वमात्रस्य वा विध्यर्थस्य क्रियायामभावबोधकत्वोपगमे व्युत्पत्त्यन्तरस्य कल्पनीयतया गौरवात्। नञर्थाभावे इष्टसाधनताबोधकत्वव्युत्पत्तेरभावविधिस्थले भवतोऽप्यावश्यकत्वात्। नचैवमभावविधिवत् निषेधोऽपि अभावप्रवर्त्तक एव स्यात् न तु प्रतियोगिगोचरनिवृत्तिप्रयोजकः प्रतियोगिनि द्विष्टसाधनत्वाबोधनादिति वाच्यम्। प्रतियोगिनोद्विष्टसाधनतां विना तद्भावस्य द्विष्टाभावसाधनत्वानुपपत्त्या उत्तरकालं तत्कल्पनया प्रतियोगिगोचरनिवृत्तिनिर्व्वाहात्। नच विधिनिषेधयोरविशेषः अभाव

रूपेष्टसाधनताया विधिस्थले निषेधस्थले चा-
भावरूपतत्साधनताया बोध इति विशेषात्।
न चाभावविधिस्थलेऽपि अभावे इष्टसाधनता-
न्वयमनभ्युपगम्य प्रतियोगिन्येवेष्टाभावसाध-
नत्वरूपानिष्टसाधनत्वबोधः किन्नोपेयते प्रति-
योगिन इष्टाभावसाधनत्वमभावस्येष्टसाधनत्व-
निर्व्वाह्यमित्युत्तरकालमभावे इष्टसाधनत्वक-
ल्पनयैव तद्गोचरप्रवृत्तिनिर्व्वाहसम्भवादिति
वाच्यम्। एकादश्यामुपवसेत् जन्मतिथावा-
मिषं परिहरेदित्याद्यभावविधौ धात्वर्थ एवा-
भावस्य प्रतियोगिभोजनादिविशेष्यतयाऽन्त-
र्भावात् अनिष्टासाधनत्वरूपविध्यर्थाभावस्य
प्रतियोगिनि बोधासम्भवेन (१) न भुञ्जीत उप-
वसेदित्यादिविधिवाक्यानामनुभवसिद्धा वि-
लक्षणबोधजनकतानुभवानुरोधेनाभावे इष्टसा-

---

(१) एकदेशेऽन्वयस्याव्युत्पन्नतया धात्वर्थैकदेशे अन्वयासम्भव इति भावः।

धनताबोधस्यैव सर्व्वत्राभावविधिस्थले स्वीक-र्त्तुमुचितत्वात्। मैवम्। रात्रौ श्राद्धं न कुर्व्वीता-मावास्यायां श्राद्धं कुर्व्वीतेत्यादौ एकक्रिया-वैयर्थ्यभयेन नञः पर्य्युदासत्वासम्भवेन प्र-तिषेधवचनताया आवश्यकत्वात्। रात्रिश्राद्ध-करणस्य नरकासाधनत्वेन तदभावस्य नरका-भावासाधनतया क्रियायामिष्टसाधनत्वाभाव-बोधस्यावश्याभ्युपेयतया क्रियायां लिङर्था-भावबोधकताया नञो व्युत्पन्नत्वान्निषेधान्तर-स्थलेऽपि तत्र तदभावबोधे बाधकाभावात्। अभावविधावेव तत्रेष्टसाधनताबोधात्।

अथ भोजनाभावादेरजन्यस्य कृत्य-साध्यतया तत्र प्रवृत्तेरसम्भवात् कथमुपवसे-दित्यादेरभावविधित्वमिति चेत्सत्यम्। एकदा प्रतियोग्यभावयोरप्रवृत्तेस्तयोरेकगोचरप्रवृत्ता-वपरगोचरप्रवृत्तेः प्रतिबन्धकतया भोजना-भावकृतेर्भोजनाद्यनुकूलकृतिविघटनेन भोज-

नाद्यभावस्य निर्व्वाहकत्वात्। तद्गोचरप्रवृत्तौ-क्षेमसाधारणतत्साधनत्वस्याक्षतत्वेन तस्यापि कृतिसाध्यत्वात्। अभावेऽप्रवृत्तौ प्राणपञ्चकसञ्चाराभावेऽप्रवृत्त्या कुम्भकस्य प्रयत्नसाध्यतानुपपत्त्या प्राणायामस्याप्रयत्नसाध्यतानुपपत्तेश्च। क्रियाविरहस्य तत्साध्यताया अवश्योपपादनीयत्वात्। विधिश्चतुर्व्विधः उत्पत्तिविधिःविनियोगविधिः अधिकारविधिः प्रयोगविधिश्चेति। कर्म्मादेः प्राथमिकप्राप्तिर्यतः स उत्पत्तिविधिः प्रथमप्राप्तेरुत्पत्तित्वात्, प्राप्तिः प्रवृत्तिविषयताप्रयोजकप्रतीतिः। दध्ना जुहोतीत्यादेः प्रमाणान्तरप्राप्तहोमादिकमनूद्य दध्यादिरूपगुणविधायकस्य होमादिकर्म्मोत्पादकत्वाभावात्। प्राप्तौ प्राथमिकत्वविशेषणम्। उत्पत्तिविधिश्च कश्चित् कर्म्ममात्रोत्पादकः यथा अग्निहोत्रं जुहोतीत्यादिः, कश्चिद्गुणविशिष्टकर्म्मोत्पादकः य-

था सोमेन यजेतेत्यादिः,तत्र विशेषणीभवत्सो-
मादिद्रव्यस्याप्यप्राप्ततया विधेयत्वात् । कश्चि-
त् प्राप्ते कर्म्मणि गुणमात्रविधायकः, यथा द-
ध्ना जुहोतीत्यादिः, उपसद्भिः(१) चरित्वा मास-
माग्निहोत्रं जुहोतीत्यादिश्च । दध्ना जुहोतीति-
वत् न यावज्जीवमग्निहोत्रं जुहोतीत्यादिवि-
धिप्राप्ताग्निहोत्रानुवादेन द्रव्य-कालोभयविधिः
गुणद्वयस्य मिथोविशेष्य-विशेषणभावानाप-
न्नस्य विधाने विधेयताभेदेन वाक्यभेदप्रसङ्गा-
त् विधेयताद्वयस्य परस्परनिरूप्य-निरूपक-
भावविरहेण तच्छालिधियो विशृङ्खलसमुहाल-
म्बनरूपतया तज्जनकवाक्यस्यैकवाक्यत्वा-
संभवात् अतोऽसौ गुणद्वयविशिष्टगौणाग्नि-
होत्रपदार्थरूपकर्म्मान्तरविधिरेव, तथा सति
च न वाक्यभेदः । इतरविशेषणतया विधे-
यकोटिनिविष्टयोरेकविशेष्यता- निरूपितविशे-

(१) 'उपसद्भिः' सतिलव्रीहिभिरित्यर्थः ।

षणतापन्नयोर्विधेयघटकतया विधेयताद्वय-
स्य स्वनिरूपकविशेष्यताद्वारा निरूप्य-निरू-
पकसम्भवात् प्राधान्येन द्वयोर्विधाने प्रधान-
योः परस्परापेक्षाविरहेणानुवाद्यविशेष्यताविधेयताभेदेन विधेयद्वयविषयतयोर्विशृङ्खल-
तया तथासत्येव वाक्यभेदात्। विनियोगे
विधेश्च विनियोगेन परार्थतया अन्यविधेः
परार्थत्वमेव च शेषत्वं, परोपकार्य्यत्वमेव शेषि-
त्वमिति मीमांसकपरिभाषा। न च काम्यक-
र्म्मण उत्पादकस्य स्वर्गकामो यजेतेत्यादि वि-
धेरपि विनियोगविधित्वापत्तिः तत्र क्रिया-
याः पुरुषार्थसाधनत्वरूपशेषत्वेन विधा-
नादिति वाच्यम्। तत्र क्रियायाः कृति
साध्यतया विधानमादाय उत्पत्तिविधि-
त्ववत् पुरुषार्थसाधनताविधानमादाय विनि-
योगविधित्वस्येष्टत्वात्, क्रियोत्पत्तिविधितः
प्रथमं क्रियाकर्त्तव्यतयैव प्रतीयतेऽनन्तरंच

कुत्रैतदुपयोग इत्याकाङ्क्षायां पुरुषार्थोपयोगि-
ताप्रतीतिरिति फलभेदेन एकविधेरेव उभयवि-
धित्वौचित्यात्। विनियोगविधिश्च यत्र न प्रत्यक्षः
तत्र मन्त्रलिङ्गादिना कल्प्यः। मन्त्रलिङ्गञ्च
मन्त्रस्य विनियोगसाधनोपयोग्यर्थप्रकाशन-
सामर्थ्यं तदुक्तं क्षमता च लिङ्गमिति यथा
बर्हिर्देवसदनं दामीत्यादिमन्त्रस्य बर्हिच्छेदा-
दिविनियोगस्य लिङ्गविधया साधकं बर्हिच्छे-
दादिप्रकाशनसामर्थ्यं, तल्लिङ्गकानुमानञ्चायं
मन्त्रोबर्हिच्छेदने विनियुक्तः असति बाधके
तत्प्रकाशकत्वात् यो मन्त्रोऽसति बाधके
यत्कर्म्मप्रकाशकः स तत्र विनियुक्तः क्रव्या-
दांशप्रक्षेपप्रकाशतद्विनियुक्तः क्रव्यादमग्निमि-
त्यादिमन्त्रवदित्यादि। यत्र लिङ्गेनान्यत्र वि-
नियोगःसेद्धुमर्हति श्रुत्या चान्यत्रतत्र श्रौत एव
विनियोगः, न तु लैङ्गिकः, श्रुतिश्च विभक्त्यं
न्तपदश्रवणं, तदुक्तं श्रुतिर्द्वितीयेति, द्विती-

थापदं विभक्तिमात्रोपलक्षकं, यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र इन्द्रप्रकाशकमन्त्रस्य गार्हपत्योपस्थाने विनियोगसिद्धिर्न तु इन्द्रोपस्थापने, तथाहि तत्र द्वितीया विभक्तिरूपश्रुत्या गार्हपत्याग्नेरुपस्थेयत्वरूपं शेषित्वं ऐन्द्र्या तृतीययाच इन्द्रमन्त्रस्य उपस्थानकरणत्वरूपं शेषत्वं झटिति बोध्यते, मन्त्रस्य इन्द्रप्रकाशकतया लिङ्गेन च इन्द्रोपस्थानकरणरूपत्वविनियोगसिद्धिश्च विलम्बेनैव, यतो मन्त्रस्य स्वार्थप्रकाशने सत्येव इन्द्रप्रकाशनसामर्थ्यं ग्रहीतव्यं तदनन्तरमेव च तादृशज्ञानादिन्द्रोपस्थानकरणत्वसिद्धिर्भविष्यति, तत्पूर्वमेव–मन्त्राधीनेन्द्रबोधनिरपेक्षया श्रुत्या गार्हपत्योपस्थानकरणत्वं बोध्यते। एवञ्च विनियोगाकाङ्क्षाविरहान्नलैङ्गिको विनियोगश्च सिध्यति।तदुक्तं पार्थसारथिमिश्रैः श्रुतिलिङ्गाधिकरणे यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते।

तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेदिति॥ एतच्च ऐन्द्रीपदं ऋग्विशेषे रूढमित्याशयेन तस्य योगेनेन्द्रप्रकाशकत्वार्थकत्वे ऐन्द्रीपदादेरसामर्थ्यरूपलिङ्गज्ञानात्तत्र मन्त्रजन्यशाब्दबोधापेक्षाविरहेणासङ्गत्यापत्तेः, श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रोक्तं श्रुत्यपेक्षया लिङ्गस्य विलम्बेनार्थबोधकतया दौर्बल्यमपि निराकाङ्क्षतया विनियोगासाधकत्वमेव।

अथात्र श्रुतिमात्रेण न लिङ्गविरोधः द्वितीया–तृतीयाभ्यां प्रतियोग्यनुपरक्तशेष–शेषिभावबोधनात्तादृशस्य ऐन्द्र्याः शेषत्वस्य गार्हपत्ये शेषित्वस्य च भिन्नाभिन्नप्रातियोगिसाधारणस्याविरोधादितिप्रतियोग्युपस्थापक-समभिव्याहृतगार्हपत्यादिपदसहकारेणैव प्रतियोगिविशेषोपरक्तयोः शेष–शेषिभावो मन्त्रबोध्यशेषशेषिभावाविरुद्धः श्रुत्या प्रतिपादनी-

यः, तथाच समभिव्याहृतपदसमुदायरूपवाक्येनैव विरोधः वाक्यस्य च लिङ्गापेक्षया दौर्बल्यमुक्तसूत्रसिद्धमिति कथं लैङ्गिकाविनियोगविरोध इति चेत् सत्यं, मिश्रैरेव शेष—शेषित्वमात्रं हि श्रुत्यैन्द्रीगार्हपत्ययोरुक्तः; अन्योन्यविषयनियमस्त्वेकवाक्यत इति कारिकया उक्तपूर्वपक्षमाशङ्क्य "सत्यं वाक्यविरोधोऽस्ति श्रुतितोऽपि विरुध्यते। साहिते हि विरुध्येते न तु लिङ्गेन केवले" इति समाहितम् (१)। यद्यप्येतदपि समाधानं शिथिलं तथा हि गार्हपत्यपदस्य लक्षणयेन्द्र परत्वे द्वितीयाया आधारार्थकत्वे वा वाक्यस्य लिङ्गे

(१) अस्यार्थः हि यतः सहिते मिलिते वाक्यविभक्त्यन्तपदश्रवणरूपश्रुतिलिङ्गेन विरुध्येते अतः श्रुतितोऽपि विरुध्यते सहित—विरोधे प्रत्येकस्यापि विरोधादिति भावः, ननु पूर्वोक्तयुक्त्या केवल—श्रुत्या अविरोधेऽपि केवलवाक्येन न कथं विरोध इत्यत आह न तु केवले इति केवले वाक्य—श्रुतौ न विरुध्येत इत्यनुषङ्गेनान्वयः केवलश्रुत्या अविरोधस्य पूर्वमुक्तत्वात्। केवलवाक्येनाविरोधमुपपादयति तथाहीत्यादिना।

नाविरोधनिर्व्वाहात् द्वितीयान्तगार्हपत्य-
पदश्रवणमात्रात् योऽर्थः प्रतीयते तद्घटित-
वाक्यार्थस्यैव लैङ्गिकार्थविरोधेनास्तां श्रु-
त्यापि लिङ्गविरोधः, तथापि पदान्तरैकवा
क्यतासहकृतश्रुतिलभ्यार्थस्य विलम्बेनप्रती
यमानतया केवलश्रुतिलभ्यस्य शीघ्रोपस्थिति-
कार्थस्याविरोधेन लिङ्गार्थबाधानुपपत्तेः। अन्य
था वाक्यमात्रस्य विरोधेनापि लिङ्गार्थबाधापत्तेः
तथापि शब्दविधया वाक्येन यो लिङ्गविरुद्धार्थः
प्रकाश्यते सोऽपि लैङ्गिकार्थापेक्षया शीघ्रोप-
स्थितिकः वाक्यस्थैन्द्रीपदोपस्थापितमन्त्र-
जन्यशाब्दबोधसापेक्षलिङ्गज्ञानाधीनानुमित्यपे-
क्षया प्रथमत एव श्रौतमुख्यार्थघटितवाक्या-
र्थस्य शाब्दबोधात्। तथाच वाक्येनापि प्र-
कृते लिङ्गस्य निराकांक्षतावाक्यलिङ्गस्य ब-
लीयस्त्वंच स्योनंते सदनं कृणोमीत्यादावेव
तत्र सदनसादनार्थकयोर्मन्त्रपूर्वोत्तर—प्रती-

कयोः प्रत्येकं सदनसादनार्थकत्वे गृहीत एव सादनस्य सदनकल्पनप्रयोजकत्वं गृहीत्वा कल्पयामीत्यन्तेन किमर्थं सदनकरणमित्याकाङ्क्षोत्थापनात् तदाकांक्षातस्तस्मिन् सीदामृते इत्यादेः प्रवृत्तिरित्याकारकपरस्परसाकांक्षात्वरूपैकवाक्यताग्रहसम्भवात्तल्लिङ्गैकार्थविनियोगसिद्धेः (१) पूर्व्वमेव सदनसादनरूपार्थप्रकाशनसामर्थ्यलिङ्गेन पृथक् तत्तदर्थं विनियोगसिद्धिरिति वाक्यस्य निराकाङ्क्षतया विनियोगासाधकत्वात्। मन्त्रलिङ्गवत् कथितसूत्रनिर्द्दिष्टवाक्य-प्रकरण—स्थान-समाख्यानामप्यनुमानोत्थापकतयैव विनियोगसाधकत्वं बोध्यम्। सूत्रे लिङ्गपदं मन्त्रलिङ्गपरमेव,

---

(१) परभागः पूर्व्वभागप्रयोज्यफलप्रयोजकः पूर्व्वभागोत्थायाकाङ्क्षानिवर्त्तकत्वादित्यनुमानेन भागद्वयप्रयोज्यैक फलसिद्धौ समुदाय मन्त्रस्यैकार्थविनियोगासिद्धिरिति भावः।

लिङ्गसामान्यपरत्वे वाक्यादिचतुष्कस्यापि तदन्तर्भावेणैव पृथगुपादानासङ्गतेः । तत्र वाक्यं पदानामेकवाक्यता पूर्वोक्ता, प्रकरणं यज्ञोपयोगस्तस्य शेषिणः कथम्भावरूपाकाङ्क्षयाभिधानम्, स्थानंतत्साभिध्यं समाख्या अवयवशक्त्या उपयुक्तार्थसमर्थनम्, तथाचोक्तं श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि । सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्येति लिङ्गादीनां स्मृत्याचारवत् श्रुतिकल्पकत्वेऽपि बलवत्प्रत्यक्षसिद्धश्रुत्यादिविरोधस्थले न तद्विरुद्धार्थकश्रुतिकल्पनसम्भवः । तद्विरोधेन तद्विरुद्धार्थे लिङ्गादेव प्रवृत्तेः प्रत्यक्षश्रुतिविरुद्धे यथाश्रुतार्थे स्मृतेरिवेति ध्येयम् । एतेषामुदाहरणादीनि अन्यत्रानुसन्धेयानि । विनियोगविधिरपि अपूर्वविधि–नियमविधि–परिसङ्ख्याविधिभेदात् त्रिधा । यं विधिं विना कथमपि तदर्थ-

गोचरप्रवृत्तिर्नोपपद्यतेऽसावपूर्वविधिः, नियतप्रवृत्तिफलकोविधिः नियमाविधिः, स्वविषयादन्यत्र प्रवृत्तिविरोधी विधिः परिसंख्याविधिः तदुक्तं विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येतिगीयते । अत्यन्तमप्राप्ताविति सत्यामिति शेषः, सतीत्यग्रिममेव वा विपरिणमय्यात्रापि योज्यं, अत्यन्तपदञ्च नाप्राप्तिविशेषणपरं भिन्नविभक्तिकत्वात्, किन्तु सत्यामित्यत्रयोऽसधातुस्तदर्थभवनरूपक्रियाविशेषणपरम् अतो द्वितीयान्तता, अप्राप्तिभवनविशेषणं फलतोऽप्राप्तिविशेषणमेव, अत्यन्ताऽप्राप्तिर्विधिं विना तद्विषये रागतः शास्त्रतश्च कदाचिदपि प्रवृत्त्यसम्भवः स तु प्रवर्त्तकोऽपूर्वविधिरित्यर्थः । एवम्भूतश्च विधिर्व्रीहीन् प्रोक्षतीत्यादिः, व्रीहिसाध्यपुरोडाशद्रव्यकयागजन्यापूर्वोद्यार्थिनां व्रीहीप्रोक्षणादौ प्रवर्त्तकोवि-

धिः, अप्रोक्षितव्रीहिभिरपि अवहतैर्यागनिर्व्वा-
हकपुरोडाशसम्भवात् प्रोक्षणे व्रीहिसंस्कारद्वारा
यागोपकारकत्वस्य तेन विधिना अबोधने क-
थमपि तत्र प्रवृत्तिर्न्न स्यादिति प्रकरान्तरा-
सम्भवात्, प्रवृत्तिविषयताकप्रोक्षणप्रवर्त्तकतया
तत्रोक्तलक्षणसमन्वयः। नियमः पाक्षिके सती-
ति विधिं बिना प्रवृत्तेः पाक्षिकत्वे सतीत्यर्थः
प्रवृत्तेरनियमे सतीति यावत्। तथाचतद्गोचर-
प्रवृत्तिनियम निर्व्वाहको विधिस्तान्नियमविधि-
रिति फलितं, तादृशश्चावघातादिविधिः व्रीही-
नवहन्तीति विधिं विना पुरोडाशनिष्पादकव्री-
हिवैतुष्यद्वारा यागोपकारके अवघाते इव तत्प-
रीहारेण नखदलनादावपि प्रवृत्तिप्रसक्त्या अव-
घाते प्रवृत्तिनियमो न स्यादिति तादृशविधेःप्रवृ-
त्तिनियकमनिर्व्वाहकत्वम्। यागोपकारकव्री-
हिवैतुष्येऽवघाताधीनत्व नियमस्तादृश विधितो
यद्यपि दुर्ल्लभः नियमस्यापदार्थत्वादेकवाक्या-

र्थत्वाच्च । तथापि तादृशविधितो व्रीह्यवघा-
तत्वेन विनियोगसाधनतावगमात् यागजन्यप-
रमापूर्वस्य तदवघातरूपकारणं विना अनिष्प-
त्तिप्रतिसन्धानेन तत्र नियमतः प्रवृत्तिनिर्व्वा
हः। तत्र चान्यत्र चेति यत्रोद्देश्ये यस्य विधानं
तदन्यस्मिन्नपि तत्सम्बन्धस्य तस्मिन् वा तद
न्यसम्बन्धस्य प्रवृत्तितःप्रसक्ते रित्यर्थः, तथाच
तादृशसम्बन्धप्रसञ्जकप्रवृत्तिविरोधी विधिः
परिसंङ्ख्याविधिरित्यर्थः। तत्र प्रथमः इमामगृ-
भ्नन्रसनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र इ-
मामित्यादिमन्त्रस्य रसनामात्रग्रहणप्रकाशक-
तया अश्वरसनादान इव गर्द्दभरसनाया आदा-
नेपि मन्त्रस्य विनियोगो मन्त्रलिङ्गाल्लभ्यते
तथाच तदादानकालेपि तन्मन्त्रपाठप्रवृत्त्या
तत्रापि तन्मन्त्रसम्बन्धः स्यादेव चेदेताद्विधिर्न्न
स्यात्, एतस्माच्च विधितः प्रथममश्वरसनाग्रहणे

एतन्मन्त्रविनियोगलाभे निराकाङ्क्षतया गर्द्द-
भरसनाग्रहणे तद्विनियोगालाभ इति वैयर्थ्येन
न तदाचरवणमिति एतद्विधेर्विधेयस्येतरोद्देश्ये
सम्बन्धप्रसञ्जकप्रवृत्तिविरोधिता । द्वितीयश्च
गृहमेधीये आघाराज्यभागौ जुहोतीति अत्रा-
तिदेशेन प्रकृती भूतदर्शाङ्गस्य प्रयाजादेरा-
घाराज्यभागहोमस्य गृहमेधीयाम्नाबुद्देश्ये सम्ब-
न्धलाभादीदृशविध्यसत्त्वे प्रयाजादिहोमस्यापि
तत्रानुष्ठानं स्यात् विधिसत्त्वे च इतिकर्त्तव्य-
तान्तर्गतस्याज्यभागहोमस्य विधानेनेतिकर्त्त-
व्यतान्तर्भूतहोमसमुदयाकाङ्क्षानुपत्त्या तादृशा-
काङ्क्षाया एव च प्रयाजादिप्रापकातिदेशप्रव-
र्त्तकतया तन्निवृत्त्यातिदेशाप्रवृत्तौ तत्प्रापणीय
प्रयाजादिनिवृत्तिः ।

अथ व्रीहीनवहन्तीति नियमविधि—द-
र्शितपरिसंख्याविध्योः कोविशेषः नियमविधे-

शपि परिसंख्यावदितरनिवृत्तिफलकत्वात् नियमविध्यसत्त्वे पुरोडाशद्वारा यागोपकारकवैतुष्यार्थिनोऽवघातेतरतदुपाये प्रवृत्तिशक्तेः । यदि चावघातनियमविधेरवघातप्रवृत्तिनियमफलकत्वं परिसंख्यातो विशेषः इमामगृभ्णन्रसनामित्यादिपरिसंख्याया अश्वरसनादाने मन्त्रपाठप्रवृत्तिनियमस्य मन्त्रलिङ्गेन मन्त्रस्यासाधरण्येन उपकारकताबोधनादेव निर्व्वाहात् तस्याः प्रवृत्तिनियमानुपपादकत्वादिति विभाव्यते, तदास्तु परिसंख्यायां नियमान्तर्भावः, नियमस्तु परिसंख्यायात्मन्तर्भवतु परिसंख्याफलस्य तत्साधारण्यादिति चेन्नियमस्थले इतर निवृत्तेरर्थतः सम्भवेपि तत्र तत्तात्पर्य्यानभ्युपगमात् नियमप्रवृत्तावेव तत्तात्पर्य्याभ्युपगमात् । न चोपायान्तरनिवृत्त्यापि नियमतोऽवघातप्रवृत्त्युपपत्तेर्निवृत्तोवव तत्तात्पर्यं न तु नियमप्रवृत्तावित्येव किंनोपेयत इति वाच्यम्ः।

अवघातविधिना अवघातस्यासाधारण्येन या-
गोपकारकताबोधनेपि अवघातमात्रेण वैतुष्या-
निर्व्वाहप्रतिसन्धाने अन्योपायसम्वलनेनाप्य-
वघातप्रवृत्तसम्भवादवघात विधेरितरनिवर्त्तक-
त्वायोगेन तस्येतरनिवृत्तौ तात्पर्य्यासम्भवात्।

अथ तथासत्युपायान्तरसम्बलितावा-
घाताधीनमपिवैतुष्यं शास्त्रार्थ इति चेदिष्यत
एवैतत्। अतएव (१) इतरसम्बलनस्या
शास्त्रार्थत्वे नियमो नोपेयते यथा पञ्च पञ्च
नखान् भुञ्जीतेत्यादौ तत्र पञ्चनखभक्षणे शश-
कादिपञ्चकरूपकर्म्मनियमे मिलितशशक-मा-
र्जारादिमांसभक्षणे नियमानुल्लङ्घनान्नियमेने-
तरनिवृत्त्यसम्भवात्। अतएव तत्र दोषत्रय
दुष्टोपि अगत्या परिसंख्या उपेयते, अतएव
इतरनिवृत्त्युपपत्तेः न तु नियमः तथा सति
मिलितमांसस्याभक्ष्यतानुपपत्तेः। नचैवमपि।

(१) यतः नियमे उपायान्तरलम्बनस्य शास्त्रार्थत्वं अतएवेति।

तत्र नियम एव किन्नोपेयते मिलितमांसं भक्ष्यमेवास्तु मार्जारमांसादिभक्षणप्रायश्चित्तविधीनां शशकादिमांसासंवलितमांसभक्षणपरतयैवाविरोधात् इति कथं दुष्टायाः परिसंख्याया आदर इति वाच्यम्। शिष्टाचारविरोधात् बहुतरप्रायश्चित्तविधिषु सङ्कोचेन गौरवप्रसङ्गाच्च। श्वाविधं शल्लकीं गोधां खड्ग-कूर्म्म-शशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥ इति मनुवचने निर्द्धारणसप्तमीबलात् पञ्चनखपरिसंख्यानपरमेवैतत् इति शूलपाणिः। यद्यपि भक्ष्यपञ्चनखे शशकाद्यभेदनियमेन इतरपञ्चनखस्याभक्ष्यता लभ्यते भक्ष्यपञ्चनखत्वे शशकाद्यभेदव्याप्यतालाभे शशकादिभिन्नपञ्चनखे गृहीतव्यापकताकशशकाद्यभेदाभावेन भक्ष्यपञ्चनखत्वाभावसिद्धौ भक्ष्यत्वाभावमादायैव पर्य्यवसानादिति मन्यते तदास्तु तत्र परिसंख्याकार्यकारी नियम एव

यद्यपदार्थस्य व्याप्य-व्याप्यकभावस्य संसर्ग-मर्य्यादया भानसम्भवः। वस्तुतस्तु उद्देश्यतावच्छेदकविधेयसम्बन्धयोरेव व्याप्य-व्यापकभावस्य संसर्गमर्य्यादया भानं व्युत्पत्तिसिद्धं तथाच भक्ष्याः पञ्चनखाः पञ्च इत्यादिवाक्यस्थले भक्षत्वविशेषितपञ्चनखानां शशकाद्यभेदरूपविधेयोद्देश्यतया अभिमतव्याप्य-व्यापकभावलाभेऽपि पञ्च पञ्च नखान् भुञ्जीतेत्यादिवाक्यात्तल्लाभासम्भवः, पञ्चनखकर्म्मताविशेषितभक्षणबोधकतादृशवाक्याद्भक्षणकर्म्मताविशेषितपञ्चनखस्यालाभेन तादृशस्योद्देश्यत्वासम्भवादन्तरेण परिसङ्ख्यानं नेतरनिवृत्तिः सम्भवति। ननु इमामगृभ्णन्रसनामित्यादिपरिसंख्याविधिस्थले पूर्वदर्शितरीत्या इतर निवृत्तिः सम्भवति, पञ्च पञ्च नखानित्यादौ च परिसंख्यायां कथमितरपञ्चनखाभक्ष्यत्वलाभ इति चेत्, लक्षणया पञ्चपदस्य-

पञ्चातिरिक्तत्परतया भक्षणार्थकधातोश्च ब-लवदनिष्टानुबन्धिभोजनार्थकतया तल्लाभस-म्भवः। अथवा धातुर्न्नभोजनविशेषपरोऽपि तु विरोधिलक्षणया भोजनाभावपर एव, तत्र च विधिप्रत्ययेन नरकनिवृत्तिरूपेष्टसाधनत्वं प्र-त्याय्यते अतो विध्यर्थबोधकतया लिङादेःसाधु-त्वनिर्वाहः।अत एव च स्वार्थहान्यादिदोष इति यत्र नियमेनोपपत्तिस्तत्र न तदादरः। अत एव याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्ज्जयेदि-त्यादौ ब्राह्मणधनार्ज्जने याजनादिकरणकत्व-नियम एव सर्वसिद्धः तावतैव वाणिज्यादिना त दर्ज्जननिवृत्तिसिद्धिः।तथाहि बलवदनिष्टाननुब न्धित्वरूप विध्यर्थविशेषितधनार्ज्जनरूपोद्देश्ये याजनादिकरणकत्वस्य विधाने तस्य तत्सम्ब-न्धस्य वा तादृशोद्देश्यतावच्छेदके व्याप्यत्व-लाभात् तदभावेन वाणिज्यादिकरणकार्ज्जने-ऽनिष्टानुबन्ध्यर्ज्जनत्वस्य व्याप्यस्याभावे सिध्य

ति तत्रानिष्टानुबन्धित्वस्यैव सिद्धिपर्य्यवसा-
नात्। न हि तत्र शशक-मार्ज्जारादिककर्म्मकै-
कभक्षणसम्भवात् वाणिज्य-याजनादिकरणकै-
कार्ज्जनसम्भवः येन करणनियमपक्षे तत्रानि-
षिद्धयाजनादिकरणकत्वाभावविरहेण दर्शित-
रित्या निषेधपर्य्यवसानेन परिसंख्याद्रियेत।
अतएव शब्दनिर्णये विधिवादे वाचस्पति-
मिश्रैः नियमः पाक्षिके सतीत्यादिकम्।
कारकाणां यत्र पाक्षिकता समुच्चयासम्भ-
वरूपा तत्र नियम एवाद्रियते, तत एवेतरनि-
यमनिवृत्तिसम्भवात्, यत्र तत्समुच्चयसम्भव-
स्तत्रागत्या कारकान्तरनिवृत्तये परिसंख्येत्येव
व्याख्येयम्। इदन्तु चिन्त्यते ब्राह्मणो धनमर्ज्ज-
येदित्यत्र ब्राह्मणो विशेष्यः न तु धनार्ज्जन
विशेषणं, एवञ्च ब्राह्मणकर्तृकत्वाविशेषितध
नार्ज्जनस्योद्देश्यत्वासम्भवात्तदविशेषितानिष्टा-
ननुबन्धिधनार्ज्जनस्यैवोद्देश्यत्वमुपेयम्। त

द्व्यापकता च न याजनादिकरणकत्वस्य सम्भवति वैश्यादिकर्तृकवाणिज्यादिकरणकानिषिद्धधनार्जनसाधारण्याभावात्। एवं बलवदनिष्टाननुबन्धित्वादिविध्यर्थस्याख्यातार्थकृतावन्वयमतेऽनिष्टाननुबन्धिकृतिविषयार्जनमेव याजनादिकरणोद्देश्यमुपगन्तव्यं तच्च न सम्भवति तादृशकृतेः कर्त्राख्यातस्थले धात्वर्थविशेष्यतयैव भानात्। एवं याजनत्वस्य प्रत्येकमेव विधेयतया प्रत्येकं नानिषिद्धब्राह्मणधनार्जनव्यापकता परस्परं व्यभिचारात्। अन्यतमकरणकत्वत्वेन व्यापकतासत्त्वेऽपि नोक्तवाक्यात्तल्लाभसम्भवः तादृशरूपस्य विधेयतानवच्छेदकत्वात् विधेयतावच्छेदकरूपेणैव च विधेये व्यापकताबोधस्य व्युत्पत्तिसिद्धत्वात् अन्यथातिप्रसङ्गात्। याजनादित्रित्वस्य त्रितयसाधारणत्वेन तत्तत्करणकत्वत्वेन व्यापकत्वसम्भवात्। अन्यतमत्वा-

घटितेन तेन रूपेण व्यापकता विवक्षणीये-
त्यपि न, त्रित्वस्य व्यासज्य वृत्तितया तत्प-
र्य्याप्त्यधिकरणकरणकत्वस्य प्रत्येकमसत्त्वेना-
प्रसिद्ध्या व्यापकत्वासम्भवात् पर्य्याप्तिसम्ब-
न्धेनैव च बहुवचनस्य त्रित्वाद्यन्वयबोधक-
ताव्युत्पत्तेः, पर्य्याप्त्यघटिततदाश्रयकरणत्वस्य
विधेयतावच्छेदकतया भानासम्भवात्। एवं
याजनादित्रितयविशेषितत्रित्वस्य बहुवचने-
न प्रकृत्यर्थविशेष्यतया बोधो न सम्भवति
याजनत्वाद्यवच्छिन्नविशेषणतया बहुवचनार्थ-
त्रित्वान्वयात्। तथा च त्रित्ववद्याजनत्वादि-
कमेव विधेयतावच्छेदकघटकं तादृशञ्च प्रत्ये-
कवृत्तितया न व्यापकतावच्छेदकमिति न प्र-
तीकारः। यदि च ब्राह्मणो धनमर्जयेदित्यतो-
ब्राह्मणकर्तृकानिषिद्धधनार्जनत्वादेरुद्देश्यताव-
च्छेदकतया अभानेऽपि तद्रूपनिरूपितव्यापक-
ता सम्बन्धमर्य्यादया भासते इत्युपेयते, उपे-

यते च व्युत्पत्तिवैचित्र्याद् बहुत्वस्य पर्य्याप्तिं परित्यज्याश्रयतामात्रं सम्बन्धः, तदा पञ्च पञ्च-नखान् भुञ्जीतेत्यादावपि विपरीतविशेष्य-विशेषणभावलभ्यस्य भक्ष्यपञ्चनखत्वस्य वाक्यादुद्देश्यतावच्छेदकतया अभानेऽप्येतादृशसमभिव्याहारस्थले तद्रूपनिरूपितायाः शशकादिपञ्चकत्वाश्रयाभेदत्वावच्छिन्नव्यापकतायाः संसर्गमर्य्यादया भानसम्भवेन इतरनिवृत्तिसिद्धेः तत्रापि परिसंख्या न स्यात्। इदन्तु तत्त्वम् उद्देश्यतावच्छेदकविधेययोर्व्याप्य–व्यापकभावबोधनेनान्यथा वा यत्रेतरनिवृत्तौ विश्रान्तिस्तदैव परिसंख्यावाक्यम्, स च क्वचित् प्रवर्त्तकतया परिसंख्याविधिः इमामगृभ्णन्नित्यादिः, क्वचिन्निषेधवन्निवृत्तिमात्रपरतया अविधिरूपं परिसंख्यावाक्यं, पञ्च पञ्चनखा नित्यादि याजनाध्यापनेत्यादिकमपि परिसंख्यैवेति। अथैवं सति परिसंख्या

स्थाने स्वार्थहान्यादिदोषप्रवादस्यासङ्गतिः स्वार्थपरित्यागमन्तरेणापि परिसंख्याविधिस्थले पञ्चनखादिपरिसंख्यास्थलेऽपि इतरनिवृत्तिसिद्धेर्दर्शितत्वात्। एवमृतौ भार्य्यामुपेयादित्यादिनियमो न तु परिसंख्या दोषत्रयग्रासादिति सर्व्वसिद्धसिधान्तोऽपि व्याहन्येत स्वार्थहान्यादिमन्तरेणैवानिष्टाननुबन्धिभार्य्याभिगमने ऋतुकालव्याप्तिबोधात् परिसंख्याफलस्येतरकाले भार्य्याभिगमननिवृत्तिनिर्वाहान्नियमानावश्यकत्वात्। न च ऋतावनभिगमने प्रत्यवायश्रुतेः ऋतुकालाभिगमनस्यावश्यकत्वे तात्पर्य्यमावश्यकमिति तत्र नियम इति वाच्यम्। अनृतावभिगमस्यापीन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत प्रसज्येत कामत इत्यादिनिषेधासदेकवाक्यतया परिसंख्याया अप्यौचित्यादिति चेन्न येन रूपेणोद्देश्यता तदन्यरूपव्यापकता उद्देश्य—विधेय-

भावमर्य्यादातो न लभ्यते इति पञ्च पञ्च-
नखान् भुञ्जीतेत्यादावुद्देश्याविशेषणभक्ष्यप-
ञ्चनखत्वादौ शशकाद्यभेदव्याप्त्यलाभ इत्या-
शयेन तत्र परिसंख्यायां स्वार्थहान्यादिदो-
षस्यप्राचीनैरभिधानात्। अतएव शिरोमणि-
भट्टाचार्य्यैरेवकारार्थविचारे इहभवने मैत्रे-
णैव पक्ष्यते तेमनमित्यत्र तेमनकर्म्मकपाकत्वे-
न पाकानुपस्थित्या तद्रूपस्योद्देश्यतावच्छेदक-
त्वासम्भवात्, एतद्भवनवृत्तित्वविशेषिततद्रू
पावच्छेदेन मैत्रान्यकर्तृकत्वव्यवछेदबोधा-
सम्भवात् मैत्रान्यस्मिन्नेतद्भवनाधिकरणकते-
मनकर्म्मकपाककर्तृत्वव्यवच्छेदबोधाय एवका-
रस्य लक्षणकृता। प्रकृते च लक्षणोपगमे
स्वार्थपरित्यागो ध्रुवश्च, ऋतौ स्वदारान् गच्छे-
दित्यादौ यद्यपि लिङर्थबलवदनिष्टाननुबन्धि-
त्वविशेषितभार्य्याभिगमनत्वानाभिगमस्य भा-
नात्तद्रूपस्य कालविशेषसम्बन्धोद्देश्यतावच्छे-

दकत्वं सम्भवतीति तद्रूपे ऋतुकालसम्बन्धव्याप्तिलाभः सम्भवति, तथापि पचति चैत्रोगच्छतीत्याद्यप्रयोगादाख्यातार्थस्य विधेयतयैव भानं न तूद्देश्यतावच्छेदकतयेति व्युत्पत्तेर्ब्बलवदनिष्टाननुबन्धित्वरूपालिङर्थस्य नोद्देश्यतावच्छेदकत्वं व्युत्पत्तिसिद्धमित्यालोच्य तत्र परिसंख्या नादृता, किन्तु ऋतुकालेऽभिगमनियम एव। अथ ऋताविति वाक्यात्तत्कालेऽभिगमननियमबोधनोऽपि तत्कालीनानभिगमनेऽनिष्टसाधनत्वाबोधकतया तादृशविधिवाक्यात्तत्कालीनाभिगमने प्रवृत्तिनियमं नोपपादयतीति तस्य नियमविधित्वं दुर्घटमिति चेन्न तादृश वाक्यस्य तत्कालीनाभिगमने नरकाभावरूपे ष्टसाधनताबोधकत्वोपगमेनोत्तरकालमर्थतस्तत्कालप्रत्यासन्नस्याभिगमनाभावस्य नरकसाधनत्वबोधात् तत्कालीनाभिगमे नियतप्रवृत्त्युपपत्या तद्वाक्यस्य नियमवि-

६

धित्वोपपत्तेः । सन्ध्यामुपासीतेत्यादिनित्यविधीनां क्रियासु नरकाभावसाधनताबोधकतया-उक्तरीत्या तत्र नियमप्रवृत्तिसम्पादकत्वेऽपि न तेषां नियमविधित्वं विधिं विनापि यादृशक्रियायां रागादितः प्रवृत्तिसम्भवस्तत्र प्रवृत्ति नियमोपपादकविधेरेव नियमविधित्वात् । परन्तु सन्ध्यावन्दनादावन्यतः प्रवृत्त्यसम्भवात्तद्विधायकवाक्यानामपूर्व्वविधित्वमेव । अथोक्तरीत्यैव ऋतावित्यादिविधेः क्रियायां नियतप्रवृत्तिनिर्व्वाहकत्वे तस्य नियमबोधकत्वं किमर्थमुपेयत इति चेन्नोपेयत एव तथात्वं नियमाबोधकत्वेऽप्यवघातविधिवन्नियमविधित्वसम्भवात् । ऋतौ भार्य्यामुपेयादेवेत्यादिवाक्ये त्वेवकार स्यायोगव्यवच्छेदार्थकतया भार्य्याभिगमे ऋतुकालवृत्त्यभावप्रतियोगित्वव्यवच्छेदरूपव्यापकताबोधस्यावश्यकतया तत्रैव नरकाभावरूपेष्टसाधनत्वान्वयः ।

केचित्तु कालनिष्ठक्रियाया अयोगे लिङर्थबलवदनिष्टाननुबन्धित्वव्यवच्छेद एवकारेण बोध्यते इत्याहुः।

कार्त्तिकादौ हविष्यं भुञ्जीतेत्यादिर्नापूर्वविधिः दुग्धादिरूपहविष्यभोजने रागत एव प्रवृत्तिसम्भवात्। नापि ऋतुकालाभिगमादिविधिवन्नियमविधिरकरणे प्रत्यवायस्याप्रामाणिकत्वात्। नापि परिसंख्याविधिः इमामगृभ्णन्नित्यादेर्गर्ध्धभरसनाग्रहणे एतन्मन्त्रस्य सफलत्वज्ञानविरोधितया तत्र तत्तन्मन्त्रपाठाप्रवृत्तिप्रयोजकतावत् प्रकृतस्य हविष्येतरभोजने लौकिकप्रमाणसिध्धफलकेसफलत्वज्ञानाविघटनेन प्रवृत्तिविरहप्रयोजकताया असम्भवात्। अपि तु हविष्यं ब्रह्मचारित्वं महापातकनाशनमित्याद्यर्थवादबोधितफलार्थिनं हविष्येतरभोजनाद्यभावे प्रवर्त्तयन् एका-

दश्यामुपवसेदित्यादिवत् अभावविधिरेव। न च तद्वाक्यादितरभोजनाद्यभावबोधासम्भवा-न्न तद्विधित्वसम्भव इति वाच्यम्। तथाविध-विधेरर्थवादेन कल्प्यत्वे हविष्येतरन्न भुञ्जीते-त्याद्याकारकस्यैव कल्प्यत्वात्। प्रत्यक्षत्वे पञ्च पञ्चनखानित्यादाविव लक्षणयाभिमतार्थबोध-कताया उपपादनीयत्वात्। अर्थवादेऽपि हवि-ष्यादिपदस्य तदितरभोजनाद्यभावे लाक्षणि-कत्वोपगमात्। भुञ्जीत पितृसेवितामित्यत्र श्रा-द्धनिवेदितजातीयेतरद्रव्यभोजननिषेधैकवा-क्यतया परिसंख्यामेव स्वीकुर्वन्ति। वस्तुतः प्रदक्षिणमुपव्रज्य भुञ्जीत पितृसेवितमित्यादि-वचनैरितिकर्त्तव्यतासन्दंशेन (१) शेषभोजनवि-धानात् शेषभोजनस्याङ्गत्वं दुरपवादमिति श्रा-द्धोपकारकतया तद्विधानेन विनियोगबिधि-प्रभेदोनियतप्रवृत्तिफलकत्वान्नियमविधिरूपोऽ

(१) समभिव्याहारेणेत्यर्थः।

यम् । शेषासत्त्वेनास्याङ्गतेति आवश्यकोपवा-
सादिदिने शेषभोजनमन्तरेणापि प्रधान-
निर्व्वाहस्तत्राश्राद्धेनिःशेषान्नमांसादिदानेन ।
श्राद्धशेषभोजनरूपाङ्गस्यानपेक्षानिर्व्वाहात् ।
एवमेव श्राद्धविवेककृतः । न च श्राद्धजन्या-
पूर्व्वे शेषभोजनस्य कारणत्वे कथं तद्घटित-
सामग्रीतः परमापूर्व्वोत्पत्तिः, कारणत्वाभावे शे-
षसत्वेऽपि तदपेक्षा न स्यात् कथं वा तदङ्गं
भवेत्, सावशेषश्राध्धजन्यपरमापूर्व्वे तस्य
कारणत्वोपगमेऽपि निरवशेषश्राद्धजन्यपरमा-
पूर्व्वसामग्र्याः शेषसत्त्वेऽपि तद्भोजनमन्तरेणा-
पि अक्षतत्वात् प्रधानानिर्व्वाहोदुर्घट इति
वाच्यम् । शेषभोजनवत् शेषाभावस्या-
पि वैकल्पिकाङ्गत्वेन श्राद्धजन्यपरमा-
पूर्व्वसामान्योत्पत्तौ शेषाभाव-शेषभोजन-
रूपाङ्गद्वयान्यतरसामग्र्यपेक्षया सामञ्जस्या-
त् । न च शेषाभावस्याङ्गताबोधकाविध्यभावात्

कथं तस्याङ्गतेति वाच्यम्। शेषसत्त्वे किं कु-
र्व्वीतेत्याकांक्षया प्रवृत्तस्य शेषान्नं भुञ्जीतेति-
विधेः शेषसत्त्वे भोजनापेक्षाबोधकतया शेषा-
सत्त्वे तदन पेक्षा बोधक तया शेषासत्वे
शेषभोजनं विनैव प्रधानसिद्धिरित्येत-
ल्लाभात्, तत्र शेषाभावस्यानपेक्षायांशेषसत्वेऽपि
शेषभोजनमन्तरेणापूर्व्वस्य दूर्व्वारतया शेषभो-
जनविधेस्तत्र नियमेन प्रवर्त्तकत्वायोगात्तद्विधि-
वैयर्थ्यैान शेषाभावस्याङ्गतायास्तद्बोधकाविधे-
श्चाक्षेपात् उभयस्थलसाधारणः शेषभोजना-
भावविशिष्टस्य शेषस्याभाव एवाङ्गं भुञ्जीत
पितृसेवितमित्यनेन विशेषणाभावरूपस्य शेष-
भोजनस्य वस्तुगत्या विशिष्टाभावत्वावच्छिन्नं
यदपूर्व्वसाधनत्वं तदेव बोध्यते, तद्रूपस्य
जनकतावच्छेदकत्वञ्च व्यभिचारात् शेषभोजन-
त्वस्य तथात्वबाधात् तदुत्तरकालकल्प्यं, ताव-
ता विशेष्याभावस्यापि साधारणरूपेणाङ्गता
सिद्धिरित्यप्याहुः ।

ईदृशरीत्यवै लोहितं निरस्यति शकृन्निरस्यतीत्यादिविधिबोधितलोहित–शकृन्निरासात्मकप्रतिपत्तिरूपाङ्गबाधेऽपि लोहित–शकृदाद्यसत्वस्थले प्रधानसिद्धिरुपपादनीया । न चाङ्गबाधभयेन लोहिताद्यसत्त्वस्थले लोहिताद्यन्तरं सम्पाद्यैतन्निरसनं युक्तमिति वाच्यम् । लोहितादिसत्वे किं कुर्वीतेत्याकाङ्क्षया तादृशविधीनां प्रवृत्त्या लोहिताद्यसत्वस्थले तेषां विधीनामप्रवृत्तेस्तत्र तदङ्गताबोधकाभावात् एतन्न्यायमूलक एव विप्रतिपत्तिं प्रतिवाद्याप्रयोजकत्वमिति भावः । अथ लौकिकशेषभोजनस्यालौकिकाङ्गत्वे पूर्वदिवसीयनिरामिषसकृद्भोजनस्यापि श्राद्धाङ्गता स्यादिति निरामिषं सकृद्भुक्त्वा (१) इत्यादौ निरामिषसकृद्भोज-

---

(१) भोजनस्य सकृत्त्वं द्वितीयभोजनासाहित्यं साहित्यञ्च समानदिनवृत्तित्वे सति समानकर्तृकत्वं, आसाहित्यञ्च साहित्यं यत् प्रसिद्धं तदन्यत्वं, तथाच स्वसमानकर्तृकत्व-स्वाधिकरणदिवसवृत्तित्वोभयसम्बन्धेन भोजनविशिष्टं यत् तदन्यत्वमिति बोध्यम् ।

नातिरिक्तभोजनाभावपरत्वं भज्येतेति चेन्न पूर्व्वदिवसे आवश्यकोपवासस्थले आवश्यकश्राद्धस्यानिर्व्वाहप्रसङ्गेन तत्र वैकल्पिकाङ्गान्तरकल्पने च गौरवेण तद्वचनस्य निरामिषसकृद्भोजनातिरिक्तभोजनाभावरूपाङ्गविधायकताया एवोपगमादिति शिवम्॥

इति श्रीमहामहोध्याय-गदाधरभट्टाचार्य्यविरचितविधिस्वरूपविचारः सम्पूर्णः।

समाप्त.



